किमित्यादि—तत्राहंद्वचने, न विरोधोऽविरोधस्तस्य: भाव: किं कथं जीयाद्विद्येतेति प्रश्न: । यतो हि तत्र विज्ञानत: सन्तुलित: प्रभाव: कैवल्यविशिष्टज्ञानेन यथोचितप्रभावोऽतोऽविरोध इत्युक्तम् । अहो देव्य:, इह लोके या प्रणीतिर्व्यवहारो गतानुगत्यैवान्योन्यानुकरणेनैव भवति सा प्रणीति: कल्याणकरी मङ्गलकरी न जायते ।। ३३ ।।

एवमित्यादि--एवमित्थं रुचिवेदने इच्छाज्ञाने विज्ञाश्चतुरास्ता-देव्य एतां मातरं सुविश्रान्ति विरामसमभीप्सुं लब्धुमिच्छुं विज्ञाय विशश्रमु: प्रश्नाद्विरता जाता: । हि यतोऽत्र लोकेऽगदोऽपि मित: परिमित एव सेव्य साम्प्रतमुचितं भवतीति शेष: । अर्थान्तरन्यास: अलङ्कार: ।। ३४ ।।

अवेत्येत्यादि—एका देवी विवेकाद् भुक्ते र्भोजनस्य समयमवेत्य ज्ञात्वा, मातुरग्रे नानामृदुव्यञ्जनपूर्णं विविधमिष्टाहारसहितममत्रं पात्रं प्रदधार धृतवती । एवं निजं कौशलं चातुर्यं प्रकटीचकार । उत्प्रेक्षालङ्कार: ।। ३५ ।।

मातेति—माता तदीयं भोजनसम्बन्धि रसं समास्वाद्यानुभूय यावत्सुतृप्तिं समगाज्जगाम तावदन्या देवी मृदीय: कोमलं ताम्बूलं प्रददौ । यत्प्रकृतानुरक्ति प्रकृत्यनुकूलं वस्तु तत् प्रसत्तिप्रदं प्रसाद-दायकं भवति ।। ३६ ।।

यदेत्यादि—भोजनान्ते यदाम्बा, उपमान्द्रे गृहोद्याने प्रविहर्तु-मारेभे तदा काचिद्देवी सुकरावलम्बा तया सार्धमनुजगाम । सुगात्री मनोज्ञदेहा माता विनोदवार्तामु अनुसंविधात्री कुर्वती तया समं शनकैरगात् ।। ३७ ।।

चकारेत्यादि—काचिद्देवी तस्या: शयनाय अभित: पुष्पै: प्रशस्यां मनोहरां शय्यां चकार । अन्या पदयो: संवाहने निपीडने लग्ना बभूव, यतो निद्राभग्ना नास्तु ।। ३८ ।।

एकान्वितेत्यादि एका देवी वीजनं कर्तुमेव व्यजनेन मात्रे वायुप्रदानमेव कर्तुमन्विता प्रसक्ता बभूव, अपरा देवा विकीर्णान् विपर्यस्तान् केशान् कचान् प्रधर्तुं संयन्तुमन्वितेत्यध्याहारः। एवं प्रत्येककार्ये निष्प्रयासात्परिश्रम विनैवासां देवीनामपूर्वमद्भुतं चातुर्यं पटुत्वं बभूव खलु ॥ ३९ ॥

श्रियमित्यादि— अम्बा जननी स्वके स्वकीये मुखे वदने श्रियं शोभां समादधाना सम्यग्धारयन्ती, नेत्रयोश्चक्षुषोर्ह्रियं त्रपां समादधाना, स्वके आत्मनि धृतिं धैर्यं समादधाना, उरोजराजयोः कुचयुगले कीर्ति-मौन्नत्यं समादधाना, विधाने कार्यसम्पादने बुद्धिं धियं समादधाना, वृषकर्मे धर्माचरणे रमां लक्ष्मीं समादधाना सती गृहाश्रमे विबभौ विशेषतः शुशुभे ॥ ४० ॥

सुपल्लवेत्यादि— यथा लताः सुपल्लवाख्यानतया सुन्दरकिस-लयशोभया सदैवानुभावयन्त्यो वसन्तभावनामनुभावयन्ति, अत एव कौतुकसन्निधाना मनोविनोदमाचरन्त्यो भवन्ति, तथैव ता देव्यो जननीमुदे मातृचित्तविनोदाय सुपल्लवाख्यानतया कोमलपदकथावर्ण-नेन जननीसुखमनुभावयन्त्यो निदानाद्विविधकारणान्मधुरां मञ्जु-स्वभावां तां जननीमन्वगुरनुगता अभूवन्। दृष्टान्तोऽलङ्कारः ॥४१॥

मातुरित्यादि— ता देव्यो मातुर्जनन्या मनोरथमनुप्रविधान-दक्षा इच्छानुकूलकार्याचरणनिपुणाः, अभ्युपासनसमर्थनकारिपक्षाः सेवासमर्थनकरणचतुरा आसन। अत सा माता तदत्र तासां देवीनां कौशलं नैपुण्यमवेत्य ज्ञात्वा निज गर्भक्षण प्रसूतिकालं मुदा हर्षेणातीत-वती व्यतीयाय ॥ ४२ ॥

## इति पञ्चमः सर्गः।

# षष्ठः सर्गः

गर्भस्येत्यादि— भो भो जना लोकाः! देव-देवः, देवानामपि पूज्यः स श्रीवर्धमानो महावीरतीर्थंकरो भुवि पृथिव्यां वो युष्माकं मुदे हर्षाय, अस्तुतमामतिशयेन भवतु, यस्य गर्भस्थ षण्मासमधस्त एव षण्मासेभ्य प्रागेव कुवेरो धनेशो रत्नानि पद्मरागादीनि ववर्ष, रत्नानां वृष्टिं चकारेत्यर्थः ।। १ ।।

समुल्लसदित्यादि— प्रयत्नीयितः प्रयत्नशीलो मर्त्यराट् तस्य पत्नी सा पूर्णमुदरं यस्या सा पूर्णोदरिणी वर्षेव रराज शुशुभे। कथम्भूता-समुल्लसत्पीनपयोधरा, समुल्लसन्तौ पीनौ पयोधरौ कुचौ यस्याः सा, पक्षे समुदितस्थूलमेघा, पुनः कथम्भूता-मन्दन्त्वं शिथिलत्वमञ्चन्तौ पदावेव पङ्कजे यस्याः सा, पक्षे मन्दत्वमञ्चन्ति पदानि येषां तथा भूतानि पङ्कजानि यस्यां सा, एवम्भूता वर्षेव रराज ।। २ ।।

गर्भार्कस्येवेत्यादि—एषा राज्ञी इहावसरे गुणानां सम्पदा सौन्दर्यशीलादिगुणसम्पत्त्योपगुप्ता समावृता मनी स्वल्पैरहोभिः कतिपयदिवसैर्गर्भेऽर्भको गर्भार्भकस्तस्य यशःप्रसारैः कीर्तिकलापैरिवाऽऽकल्पितं निर्मितं घनसारसारैः कर्पूरतत्त्वैराकल्पितं देहं शरीरं समुवाह, गर्भप्रभावेण तस्याः शरीरे शौक्ल्यमजनीत्यर्थ. ।। ३ ।।

नीलाम्बुजेत्यादि— तस्या महिष्या नेत्रयुगं नेत्रयोर्द्वयं कर्तृ, पुरा मया नीलाम्बुजानि नीलकमलानि जितानि, अद्य पुनः सितोत्पलानि पुण्डरीकाणि जयामि, इतीव किल, कापर्दको योऽसावुदारोऽसङ्कीर्णो गुणस्य प्रकारो भेदः शुक्लवर्णस्तं बभार दधार ।। ४ ।।

सतेत्यादि— सतां सज्जनानामर्हता पूज्येन सार्धं यत्किल विधेर्विधानं निवसनं सहवासमभ्येत्य नाभिजातस्य तुण्डीनाम्नोऽव-

यवस्य या प्रकृतिगभीरता तस्यास्तु मानमभूत् गाम्भीर्यं त्यक्त्वोच्छ्रयत्व-मन्वभूदित्यर्थः। तत्तु युक्तमेव यत्त किल नाभिजाता अकुलीना प्रकृति-र्यस्य तस्य नीचजातेः कुतोऽपि महता संयोगेऽभिमानो भवत्येव। तथापि महताऽर्हता समागमेऽपि पुना राज्ञश्चन्द्रमसः कुलमन्वयस्तदुचितेन राजवशयोग्येन वा मृगीदृशस्तस्या महिष्या मुखेन तत्रापि नतिरेव प्राप्तेत्यहो महदाश्चर्यम्। राजकुलोचितः क्षत्रियो महत्त्वेऽपि नमत्ये-वेत्यर्थः ॥ ५ ॥

गाम्भीर्यमित्यादि—अथेत्युक्तिविशेषे। अहो इत्याश्चर्ये। मञ्जू मनोहरे दृशौ चक्षुषी यस्यास्तस्या देव्या नाभिः, अन्तर्गर्भे तिष्ठतीत्यन्तः-स्थः स चासौ शिशुस्तस्मिन्। त्रयाणां लोकानां समाहारस्त्रिलोकी तस्या अप्यचिन्त्यप्रभावं स्मतुमपार्यमाणमहत्त्वं सहजमनायाससम्भवं गाम्भीर्यं विलोक्य ह्रियेव लज्जयेव किल स्वगभीरभावं आत्मीय-गम्भीरतां जहौ मुमोच ॥ ६ ॥

यथेत्यादि— तस्या इदं तदीयं यदुदरं तस्य वृद्धिरुच्छ्रायस्तस्य वीक्षाऽवलोकनवृत्तिर्यथा यथाऽभूत् तथा तथा वक्षोजयोः कुचयोः श्यामत्व तन्मुखं तस्य दीक्षोपलब्धिरभूत् तदिदमुचितमेव, यतो मध्य-स्थाऽनुत्सेकरूपा केन्द्रधरणस्वरूपा वा वृत्तिर्यस्य तस्यापि, किं पुनरितरस्ये-त्यपि शब्दार्थः। उन्नतत्वं महत्त्वं मोढुमङ्गीकर्तुं कठिनेषु कठोरेषु सत्त्वं सामर्थ्यं कुतोऽस्तु ? कुचौ च तस्याः कठिनौ तस्मात्तथात्वं स्यादेव। अर्थान्तरन्यासः ॥ ७ ॥

तस्या इत्यादि — तस्या महाराज्ञ्या उदरप्रदेशो योऽत्यन्तं कृश इति कृशीयान् पुनरपि स बलित्रयोच्छेदी त्रिबलीनां विध्वंसको जातः। दुर्बल एकस्यापि बलवतो विजेता न भवेत्, किं पुनर्बलित्रयस्येत्येताव-त्तया खलु तस्य भूपस्य सिद्धार्थस्य मुदे बभूव प्रसन्नतां चकार। किन्त्वे-तादृग् उदरे प्रभावः स सर्वोऽपि किलान्तर्भुवः प्रच्छन्नतया तिष्ठतः विवेकस्य विचारस्य नौरिव भवतः श्रीतीर्थकृत एव ॥ ८ ॥

**लोकेत्यादि**— स भगवान् महावीरः, लोकत्रयमुद्योतयति प्रकाशयतीति लोकत्रयोद्योति तत एव पवित्रं यद्वित्तीनां ज्ञानानां मतिश्रुतावधिनाम्नां त्रयं तेन हेतुना गर्भेऽपि किलोपपत्त्या सहितः सोपपत्तिर्माहात्म्यवानेवाऽऽसीदिति। अत एव स घनानां मेघानां मध्ये आच्छन्नः समावृतो यः पयोजानां कमलानां बन्धुः सूर्यः स इव स्वोचितस्य धाम्नस्तेजसः सिन्धुः समुद्रोऽर्थात्खनिराबभौ शुशुभे ॥ ६ ॥

**पयोधरेत्यादि**—इह भुवि संसारे बन्धूनां धात्री भूरिवाधारभूताऽत एवोत्तमस्य पुण्यस्य पात्री तस्यास्त्रिशलाया यथा पयोधरयोः स्तनयोरुल्लासः समुन्नतिभाव आविरास सम्बभूव, तथा मुखमेवेन्दुश्चन्द्रः स च पुनीताया निर्दोषाया भासो दीप्तेः स्थानमधिकरणं बभूवेत्येतद्विचित्रमभूतपूर्वम्, यतोऽत्र पयोधराणां मेघानामुल्लासे चन्द्रमसो दीप्तिप्रहाणिरेव सम्भवतीति। विरोधाभासः ॥ १० ॥

**कवित्ववृत्त्येत्यादि** –कवित्वस्य वृत्ति कवित्ववृत्तिस्तया कविव्यवहारेण उदितः। वस्तुतस्तु जिनराजमातुरर्हज्जनन्या जातु कदाचिदपि कोऽपि विकारः देहविपरिणामो नासीन्न बभूव। तत्रार्थान्तरेण हेतुमाह-मरुतः पवनस्यदीपिकायामधिकारो निर्वापणादिः स्यात्, किन्तु तथा विद्युतस्तडितोऽतिचारः क ? अर्थात्पवनो दीपिकां निर्वापयितुं समर्थः, किन्तु विद्युन्निर्वापणे तस्य शक्तिर्नास्तीति भावः ॥ ११ ॥

**विजृम्भत इत्यादि**--इदानीं वसन्तकाले श्रीयुक्तो नमुचिः कामदेवः प्रचण्डः सन्ननिवार्यतया विजृम्भतेऽथवा नमुचिनामा दैत्यो विजयते। अंशुः सूर्यः कुबेरदिश्युत्तरस्यामवाप्तदण्डः संलब्धमार्गसरणिरथवा समवाप्तापराधः। अदितिः पुनः पृथ्वी देवमाता च लोकोक्तौ सा समन्तात् सर्वत एवमधुना पुष्पपरागेण मधुनाम दैत्येन च विद्धं व्याप्तं धाम स्थानं यस्या सा समस्तीति किलायं कालः सुरभिरीदृक्

नाम यस्य स वसन्ततुरेव सुरेभ्यो भीतिर्यत्र स सुरभीतिः किलेत्येवं-नामा सञ्जायत इति । समासोक्तिः ॥ १२ ॥

परागेत्यादि—अनङ्गस्य नामस्यैकोऽनन्यः सखा हितकर्ता मधुर्नाम वसन्ततुः स च मानी सम्मानयोग्यो भवन् यो धनी भर्ता वन्य एव जन्यः स्त्रियस्तासां मुखानि, अवलोकनस्थानानि प्रसिद्धानि । पराग एव नीरं तेनोद्भिन्नैः परिपूर्णैः प्रसूनैरेव शृङ्गैर्जलोक्षणयन्त्रैर्हेतुभूतैर्मरुद्वारैरेव करमेन प्रयोगेणाक्षति सन्तर्पयत्यभिषिञ्चतीत्यर्थः । अनुप्रासपूर्वको रूपकालङ्कारः । नाम वाक्यालङ्कारे ॥ १३ ॥

वन्येत्यादि—इदानीं वन्या वनस्थल्या सार्धं स गोर्वसन्तस्य पाणिधृतिः पाणिग्रहणं विवाहः सम्भवति तत्तस्मादेव कारणात् पुंस्कोकिलैः कीदृशैर्विपु पक्षिषु प्रवरैर्मुख्यैः मिष्टसम्भापणत्वात्तैरेव विप्रवरैर्ब्राह्मणोत्तमैः पुनरिदानीं यदुक्तं तत्सूक्तं पाणिग्रहणकारिकाणामृचां पठनमतः सूक्तं सुष्टूक्तमस्ति । स्मरः काम एवाक्षीणो हविर्भुगग्निः सततं सन्तापकत्वादेव साक्षी प्रमाणभूतोऽत्र कार्ये । अलीनां भ्रमराणां निनादस्य गुञ्जनस्य देशो लेशः स एव भेरीनिवेशो मङ्गलवाद्यविशेषः सम्भावनीयस्तावत् ॥ १४ ॥

प्रत्येतीत्यादि—सर्वसाधारणः पथिकादिरयं वृक्षोऽशोकः शोकं न ददाति किलेत्यभिधया नाम्ना प्रत्येति विश्वासं करोति । अथ पुनरारक्तानि लोहितानि फुल्लानि प्रसूनान्येवाक्षीणि यस्य तत्तयेक्षितो रोषारुणविस्फालितलोचनैरवलोकितः सन् स एव जनः खलु दराणां पत्राणामेको धाता संधारकोऽथवा दरस्य भयस्यैकोऽनन्यो धाता सम्पादक इत्यनुमन्यमानोऽनुमानविषयं कुर्वाणस्तस्य कुजातितां कोर्भूमेर्जातिः सम्भूतिर्यस्य तत्तां किलाकुलीनतां किमुत न पश्यति पश्यत्येवेति । अन्योक्तिरलङ्कारः ॥ १५ ॥

पृदाकुदर्पेत्यादि—द्युरत्नं सूर्यः पौष्प्ये समये पुष्पप्रसवकाले वसन्तर्तौ कुबेरकाष्ठाया उत्तरदिशाया आश्रयणे प्रयत्नं विदधाति, उत्तरायणो भवतीति, कुत इति चेत् पृदाकव सर्पास्तेषां दर्पेण विषेणाङ्कितो योऽसौ चन्दनो नाम वृक्षस्तेनारक्तैरभिस्पृष्टैर्याम्यैर्दक्षिणदिक्सम्भवैः समीरैर्वायुभिस्तत्कालसञ्जातैस्तैः प्रसिद्धैर्भीतिभाग् भयसंत्रस्त इव यतः ॥ १६ ॥

जनीत्यादि—जनीसमाजस्य स्त्रीवर्गस्यादरणं स्त्रीकारस्तस्य प्रणेतुः समादेशकर्तुः स्मर एव विश्वस्य जेताऽधीनकर्ता तस्यासौ वसन्तः सहाय सहयोगकारी। वनीविहार इत्यनेनोद्यानगमनं गृह्यते तस्योद्धरणे प्रकटीकरणे एक एव हेतुरयं तु पुनर्वियोगिवर्गायैकाकिजनाय धूमकेतुरग्निरिव सन्तापकः ॥ १७ ॥

माकन्देत्यादि—माकन्दानां रसालवृक्षाणां वृन्दस्य प्रसवं कारकमभिसरतीति तस्याम्रपुष्पास्वादकस्य पिकस्य कोकिलस्य मोदाभ्युदयं प्रकर्तुं प्रसन्नतां वर्धयितुं तथैव स्मरभूमिभर्तुः कामदेवस्य नरपतेः सखाऽसौ कुसुमोत्सवर्तुर्यस्मिन् पुष्पाणामुत्सवो भवति स एष ऋतुः सुखाय विषयभोगाय निभालनीय. ॥ १८ ॥

यत इत्यादि—यतः कारणाद् अभ्युपात्ता नवपुष्पाणां तातिः समूहो येनैवंभूतः कन्दर्प एव भूपो राजा विजयाय दिग्विजयं कर्तुं याति गच्छति। पिकद्विजातिः कोकिलपक्षी कूहरिति यच्छब्दं करोति स एष शब्दः शङ्खध्वनिरिवाभिभाति शोभते ॥ १६ ॥

नवप्रसङ्ग इत्यादि—यथा कामी जन परिहृष्टचेताः प्रसन्नचित्तः सन् नवप्रसङ्गे प्रथमसमागमे नवां नवपरिणीतां वधूं जनीं मुहुर्मुहुश्चुम्बति तथैव चञ्चरीको भ्रमरः कोभूम्या माकन्दजातामाम्रवृक्षोद्भवां मञ्जरीं मुहुर्मुहुश्चुम्बति ॥ २० ॥

आम्रस्येत्यादि—कलिकाया अन्तो मध्येऽलिर्भ्रमरो गुञ्जति यस्य तस्य गुञ्जत्कलिकान्तराले, आम्रस्य विशेष्यस्य सहकारस्य, एतत्किलालीकं व्यर्थं न भवति, कुतो यतो दृशोर्नेत्रयोर्वर्त्म मार्गस्तस्मिन् कर्मक्षण एव नयनगोचरतां प्राप्तावेव पान्थाङ्गिने पान्थाय परासुत्वं प्राणरहितत्वं करोतीति तस्य तावदिति वयं वदामः ॥ २१ ॥

सुमोद्गम इत्यादि—स्मरस्य कामस्य बाणानां वेशः स्वरूपं पञ्चविध इत्याह—प्रथमस्तु सुमोद्गमः पुष्पोत्पत्तिः, द्वितीयस्तावद् भृङ्गानामुर्वी गीतिर्भ्रमरतुमुलगुञ्जनं, तृतीयः अन्तकस्यायमन्तकीयो यमसम्बन्धी, विरहिणामन्तकारित्वात् मरुन्मलयानिलः, चतुर्थो जनीनां स्त्रीणां तिर्वेषभूषा, शेषः पञ्चम एव पिकस्वनः कोकिलशब्द इति ॥ २२ ॥

अनन्ततामित्यादि--साम्प्रतमिदानीं स्मरस्यायुधैः पुष्पैरनन्ततामसंख्यत्वमवाप्तवद्भिरुपयुञ्जानैरतएव स्फुरद्भिर्विकसद्भिर्विमुक्तया परित्यक्तया पञ्चऽसख्याकतया मृत्युना वेति पञ्चतया, इतः समारभ्य कः समलङ्क्रियेत वियोगिनां विरहिणां वर्गात्समूहादपरो न कोऽपि, किन्तु स्त्रीविरहितजन एव म्रियेतेति ॥ २३ ॥

समन्तत इत्यादि—हे समक्ष, सम्मुखे वर्तमानमहाशय, सदा सर्वदैव पिकस्य कोकिलस्योदयभृत्प्रमन्नताकारकं विधान यत्र तस्मिन् माघान्माघमासाद्विनिवर्तमाने फाल्गुनमासतः प्रारब्धेऽस्मिन्नृतौ पुनीतस्य पावनरूपस्य माकन्दस्याम्रवृक्षस्य विधानं करोतीति विधायिवस्तु तादृक् सुमनस्त्वं फुल्लपरिणामः समन्तत एवास्तु । तथा मायालक्ष्म्याः कन्दस्य परिणामस्य विधायि सुमनस्त्वं देवत्वमस्तु यतो हे समक्षमः समाना क्षमा यस्य तादृङ् भित्र, अघात्पापाद् दूरवर्तिनि सदा कस्य सुखस्योदयमृद्विधानं यत्र तस्मिन् सुखाधार इति ॥ २४ ॥

ऋतुश्रिय इत्यादि—अत्र वसन्तेऽदो यत्पौष्पं रजः पुष्पपरागः अनल्पं प्रचुरं प्रसरति तत्कीदृशं प्रतीयत इत्याह—तद्रज ऋतुश्रियो वसन्तलक्ष्म्या. श्रीकरण शोभाधायक चूर्णमिव, तूर्णं तत्काल वियोगिनां विरहिणां भस्मवत्, श्रीमीनकेतोः कामस्य ध्वजवस्त्रवत्पट पताकापट-सदृशं प्रतीयत इति शेष ॥ २५ ॥

श्रेणीत्यादि--अस्मिन्नृतौ समन्तात्परितो याऽलीनां द्विरेफाणां श्रेणी पङ्क्तिर्विलसति सा पान्थोपरोधाय प्रोषितजनगमनवारणाया-दीना पुष्टा कशेव वेत्रिकेव प्रतीयत इति शेषः। असौ वसन्तश्रियो रम्या मनोज्ञा वेणीव संयतकेशपाश इव, कामो गजेन्द्र इवेति काम-गजेन्द्र, कामगजेन्द्र गच्छति बन्धनार्थं प्राप्नोतीति कामगजेन्द्रगम्या शृङ्खलेव प्रतीयते ॥ २६ ॥

प्रत्येतीति--लोको विटं कामिनं पाति रक्षतीति विटपोऽयं च विटपो वृक्ष इत्युक्तेः सागाल्लेशात्कारणात्तावत्प्रत्येति विश्वासं करोति। अथ च पुनरङ्गारतुल्यानां प्रसवानां पुष्पाणामुपहाराद्धेतोः पलमश्नाति मांसं स्वादतीति पलाशोऽयमिति नाम्नः स्मरणादयमेव लोको भयभीतः सन् स्वां स्वकीयां महिलां स्त्रियं सहायं सहकारितया समीहतेऽभिवाञ्छति रन्तुकामो भवतीत्यर्थः ॥ २७ ॥

मदनेत्यादि--एष वसन्ताख्यः क्षणः समय सुरतवार इव स्त्री-पुरुषसङ्गम इव समद्भुतः सन्नाविरभूज्जातः। यतो मदनस्य सहकार-तरोः पक्षे कामस्य मर्मणां विकासैः समन्वितः कौरकैर्हावादिभि-र्वा युक्तः। कुहुरितं कोकिलरवः सङ्गमध्वनिर्वा तस्यायोऽभिवृद्धि-स्तद्युक्ततया कारणेन सविटपः पलाशादितरुसहितः कामिजनसहि-तश्च कौतुकलक्षणः पुष्पपरम्पराचिह्नितो विनोदवाश्चेति किलात्र तस्मात् ॥ २८ ॥

कलकृतामित्यादि— अत्र वसन्ते कलकृतां मधुरं गायन्तीनां मृगस्य दृशाविव दृशौ यासां तासां हरिणाक्षीणां कामिनीनामित्येवं झङ्कृतानि नूपुराणि यस्मिन् यथा स्यात्तथा नूपुरझङ्कारं क्वणितकिङ्किणि-कङ्कृतकङ्कणं शब्दायमानक्षुद्रघण्टिकाकंकृतवलयम् श्रुत्वेत्यध्याहारः। इनः सूर्यस्तासां [illegible] मुखकमलद्रष्टुकामनया रथं स्यन्दनं मन्थरं मन्द[illegible] ॥ [illegible] ॥

[illegible]- -अस्मिन् [illegible] आम्रपल्लवेऽलिपिका-वलि भ्रमर[illegible] परितः सङ्गतां, कथम्भूतां ललितां मनोहरामभि[illegible] समाश्रयं पुष्पराशौ भुवि पृथिव्यां वशीकरणोचित[illegible] कामिजनवशीकरणमन्त्राक्षरतुल्यामित्यये प्रत्येमि जानामीत्यर्थः। उत्प्रेक्षालङ्कारः ॥ ३० ॥

नहीत्यादि— अत्र मधौ पलाशतरोः किंशुकवृक्षस्य मुकुलोद्गतिः कुड्मलोत्पत्तिर्नहि, तर्हि किमित्याह-किन्तु सती समयोचिता पतिव्रता-ङ्गना यौवनकालोचिता सुरभिणा नायकेन कलिता रचिता अपि अतिलोहिता रक्ता नखरक्षतसन्ततिर्नखाघातव्रणपङ्क्तिर्लसति शोभते। अपह्नुत्यलङ्कारः ॥ ३१ ॥

अयीत्यादि— अयि लवङ्गि, भवत्यप्यद्य शिशिर इव शैशवे बाल्ये विकलिते व्यतीते सति भ्रमरसङ्गवशाद् द्विरेफस्पर्शालिङ्गनादि-वशाद् अतिशयोन्नतिमन्तः स्तवका गुच्छा एव स्तना यस्याः सैवम्भूता सती मदनस्तवे कामस्तुतौ राजते वर्तते इत्यर्थः ॥ ३२ ॥

रविरित्यादि-- यदयं रविरुत्तरां दिशं गन्तुमुद्यतोऽभवत् तदासौ दक्षिणा दिगपि विप्रियनिःश्वसनं प्रियविरहनिःश्वासस्वरूपं गन्धवहं मलयानिलं ननु वहतितराम् अतिशयेन वहतीत्यर्थः ॥ ३३ ॥

मुकुलेत्यादि—स्थलपयोजवनेऽब्जिनी कमलिनी मुकुलपाणिपुटेन कोरकरूपहस्तसम्पुटेन रुचाम्बुजजिद्दृशां स्वकान्तिपराजितकमल-नेत्राणां युवतीनां दृशि नेत्रे, नेत्रेष्वित्यर्थः। रजः परागं ददाति क्षिपतीत्यर्थः स्मरधूर्तराट् शठशिरोमणिः कामरूपः शठराजो रसात्कौतुकात् तद्-हृदयधनं तासामम्बुजजिद्दृशां कमलनयनानां हृदयरूपवित्तं हरति ॥ ३४ ॥

अभिसरन्तीत्यादि— अत्र कुसुमक्षणे वसन्ते सरसभावं बिभ्रतीति तेषां सरसभावभृतां रसिकभावधारिणां कोकिलपित्सतां पिकानां मधुरारवैः कलकूजितैः समुचिताः शब्दायमानाः सहकारगणा आम्र-वृक्षसमूहा रुचिरतां मनोज्ञतामभिसरन्ति प्राप्नुवन्ति ॥ ३५ ॥

विरहिणीत्यादि— अयं वसन्तर्तुर्विरहिणीनां परितापं सन्तापं करोतीति तथाभूतः सन् यदिहापरिहारभृदनिवार्यं पापमकरोत्, एषको वसन्तो लगदलिव्यपदेशतया संलग्नभ्रमर-व्याजतया यदघं दधत् धारयन् सम्प्रति तत्परिणामेन विपद्यते नश्यतीत्यर्थः ॥ ३६ ॥

ऋद्धिमित्यादि-- सैषा वनी वारजनी वेश्येवान्वहं प्रतिदिनं श्रीभुवं सम्पत्तिभूमिकामृद्धिं परिवृद्धिं गच्छति। स्तेयकृता चौरेण तुल्यो भवन् रागदः कामः खरैस्तीक्ष्णैः शरैः पान्थानं प्रतर्जति भीषयति रसराजः शृङ्गाररसः सोऽस्मिन् संसारे नित्यं निरन्तरमतिथिसात् प्रतिष्ठापनमेति, अतिथिरिवादृतो भवति। सकलोऽपि नोऽस्माकं बन्धुर्मित्रवर्गः स ऋतुकौतुकीव ऋतुः शारीरिकशोभा तस्यां कौतुकीव नर्मश्रीर्विनोदवशंगतः सन्मुदं याति हर्षितो भवति। षडरचक्रबन्धः ऋतुसम्वदननामा ॥ ३७ ॥

चैत्रेत्यादि--सा भूपतिजाया प्रियकारिणी चैत्रशुक्लपक्षस्य त्रिज-यायां त्रयोदश्यां तिथौ, उत्तमोच्चसकलग्रहनिष्ठे श्रेष्ठोच्चस्थानस्थित-

ग्रहे मौहूर्तिकोपदिष्टे ज्योतिर्विदादिष्टे समये सुतं पुत्रमसूत सुषुवे ॥ ३८ ॥

**रविणेत्यादि—** तदा सा राज्ञी सता श्रेष्ठेन तेन सुतेन, रविणा सूर्येण, इन्द्रशासिका ककुबिव पूर्णदिगिव, स्फुटपाथोजकुलेन प्रफुल्ल-कमलसमूहेन वापिकेव, नवपल्लवतो नूतनकिसलयैर्लता यथा वल्लीव शुभेन मनोहरेण पुत्रेणाऽऽशु शुशुभे अशोभत ॥ ३९ ॥

**सदनेकेत्यादि—** असो महीभुजो जनी राज्ञी प्रियकारिणी रजनी रात्रिरिवासीत्तदानीमिति यात्रद्यतो लसत्तमातिशयप्रशंसनीया स्थिति-र्यस्याः सा पक्षे लसति स्फूर्तिमेति तमोऽन्धकारो यस्यामेतादृशी स्थिति-र्यस्याः । रुजः प्रतिकारिणी पुत्रजननेऽपि यस्यै किञ्चिदपि कष्टं नासीत् पक्षे रुजो व्यापाराद्यायासस्यापलापिकाऽथ च पुनः सन्ति प्रशंसा-योग्यानि अनेकान्यष्टोत्तरसहस्रं संख्याकानि लक्षणानि शुभसूचक-चिन्हानि तेषामन्वितिः स्थितिर्यत्र तादृशेन तनयेन पक्षे सतां नक्षत्राणा-मनेकेषां सुराणां च क्षणस्योत्सवस्यान्वितिर्यत्र तेन तनयेन शशिना चन्द्रमसा रात्रौ पिशाचादीनां सञ्चारो भवतीति ॥ ४० ॥

**सौरभेत्यादि—** तस्य बालकस्य वपुष्यङ्गे पद्मस्येव सौरभाव-गतिः सुगन्धानुभवोऽभूत् । याऽसौ समस्तलोकानां नेत्रालिप्रतिक-र्षिका चक्षुर्भ्रमराकर्षिकाऽभूत् ॥ ४१ ॥

**शुक्तेरित्यादि—** शुक्तेर्मौक्तिकवत्तस्या देव्या उद्भवतो जाय-मानस्य निर्मलस्य सद्भिरादरणीयस्य वपुष्मतो बालकस्य पवित्रता शुद्धताऽऽसीत् ॥ ४२ ॥

## इति षष्ठः सर्गः ।

# श्लोकानुक्रमणिका

[ आ ]



[ इ ]

[ ख ]

[ ग ]



[ घ ]



[ ज ]



[ छ ]



[ ज ]

## [ द ]

## [ प ]

[ य ]

[ र ]

[ श ]



[ स ]

—::★:

# : कतिपय क्लिष्ट शब्दों का अर्थ :

| शब्द | अर्थ | पृष्ठ | शब्द | अर्थ | पृष्ठ |
|---|---|---|---|---|---|
| अक | दुःख | ३४२ | अध्वनीन | पथिक | २२ |
| अकाण | चक्षुष्मान् | २६३ | अनक | दोष-रहित | २४६ |
| अक्ष | इन्द्रिय | २५०, ३२१ | अनङ्ग | काम | ६३ |
| अग | पर्वत,वृक्ष | ३१० | अनच्छ | मलिन | २८५ |
| अगद | औषधि | ८६ | अनन्त | शेषनाग | २६ |
| अङ्क | गोद,चिह्न | १२१ | अनभ्राज् | मेघराज | २०७ |
| अङ्गसार | शरीरबल | २ | अनिश | निरन्तर | २४६, २६१ |
| अङ्गारिका | अंगीठी | १४४ | अनीक | सेना | २१४ |
| अङ्घ्रि | चरण | ३६ | अनुपभ | उत्तम | ५२ |
| अचित् | जड़ | ३०८ | अनुमा | अनुमान | ३१६ |
| अचित्त | जीव-रहित | ३४२ | अनूचान | ब्रह्मचारी | १३४ |
| अज | बकरा | १३८ | अनोकह | वृक्ष | २५ |
| अजस्र | निरन्तर | २६ | अन्यपुष्ट | कोकिल | ५६ |
| अणु | परमाणु | ३०८ | अन्वय | वंश | २३० |
| अदन | भक्षण | १८६ | अप् | जल | ३०२ |
| अदिति | देव-माता | ६७ | अपराग | विरक्त | ८८ |
| अद्रिशासिन् | देव | ११० | अपतु | निष्प्रभ | ५८ |
| अधीति | अध्ययन | ५२ | अपाङ्ग | कटाक्ष | ३२ |
| अध्यक्ष | प्रत्यक्ष | ३२० | अब्ज | कमल,चन्द्र | ४८ |
| अध्वग | यात्री | १७६ | अब्जप | सूर्य | २२ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| आशुग | वाण वायु | १४४ |
| आस्य | मुख | ४८, ७०, १३६ |
| इङ्गित | चेष्टा | ७१ |
| इङ्गिनी | चेष्टावाली | ३३२ |
| इन | स्वामी, सूर्य | १०३ |
| इद्ध | समृद्ध | २०६ |
| इन्दिरा | लक्ष्मी | ११३ |
| इन्दु | चन्द्र | ३२७ |
| इला | भूमि | २२८ |
| इष्टि | यज्ञ | ३०६ |
| ईरण | प्रेरणा | १५५ |
| ईशायिता | ईसाईपन | २६६ |
| उच्चय | समूह | १५५ |
| उच्छिष्ट | जूठा | २०२ |
| उज्ज्वर | उज्ज्वल | २०८ |
| उडु | नक्षत्र | ६४ |
| उत्सङ्ग | गोद | १२४ |
| उत्सेक | गर्व | २५५ |
| उदक | जल | ३२५ |
| उदीची | उत्तरदिशा | २८ |
| उपायन | भेंट, नजराना | १२० |
| उरग | सर्प | ११० |
| उरु | जंघा | ५१ |
| उर्वी | पृथ्वी | २२, २७२ |
| उलूक | उल्लू | ३२१ |
| उल्का | बिजली | २२६ |
| उशीर | खस | १८२ |
| ऊह | तर्क | ३२, ३२६, २४२ |
| एण | मृग | ३२८ |
| एनस् | | ३५० |
| ओकस् | स्थान | २१६ |
| ओतुक | बिलाव | २२३ |
| क | जल | ३१५ |
| ककुभ् | दिशा | १०७, १६५ |
| ककुल्य | सुखी | १६५ |
| कङ्कोडुक | नहीं सीझनेवाला | २६३ |
| कच | केश | ५३, १६० |
| कञ्ज | कमल | ११४ |
| कबरी | केश-कलाप | ८२ |
| करक | ओला | ६२, ३१४ |
| करण्डक | पिटारी | ३१७ |
| करत्र (कलत्र) | स्त्री | १३१ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| कोष | खजाना | ३४ |
| कौतुक | पुष्प, तमाशा | ६१, १६८ |
| कौमुद | कुमुद-समूह | ११, १३ |
| कौशल | चातुर्य | ५८ |
| क्लम | श्रम | ७४ |
| क्लेद | गलन, सड़न | २४६ |
| क्षेम | कल्याण, प्राप्त-वस्तु रक्षण | २७४ |
| खट्टिक | खटीक | २५५ |
| खद्योत | जुगनूं | ६४ |
| खर्व | नाश | १५ |
| खल | दुष्ट | ७ |
| खातिका | खाई | २८ |
| गन्धकुटी | समवसरण | २०२ |
| गन्धवाह | वायु | १०५ |
| गर | विष | १५८ |
| गवाक्ष | झरोखा | ३२ |
| गुण | स्वभाव, डोरी | २० |
| गोपुर | नगर-द्वार | ३५, ११३ |
| घनसार | कपूर | ६३ |
| घूक | उल्लू | २६८ |
| घूर्ण | घूमना, कांपना | २१७ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| चक्रवाकी | चकवी | ३४ |
| चञ्चरीक | भ्रमर | १०७, ३२६ |
| चन्द्राश्म | चन्द्रकान्त | ३५ |
| चीर | वस्त्र | १५० |
| चेतस् | चित्त | २५२ |
| चैत्यद्रुम | मूर्तियुक्त-वृक्ष | २०० |
| छगल | बकरा | २६७ |
| छाग | बकरा | १४, २८८ |
| जडज | (जलज)कमल | १३ |
| जनी | स्त्री | ६७ |
| जनुष् | जन्म | १५३ |
| जम्पती | स्त्री-पुरुष | २२६ |
| जलद | मेघ | ३४६ |
| जलौकस् | जलचर | २५७ |
| जव | वेग | ६५, १११ |
| जवञ्जव | संसार | ७६, १४१ |
| जातिस्मृति | पूर्व जन्म-ज्ञान | १७२ |
| जायु | औषधि | २१८ |
| जोष | मौन | ८४, २५५ |
| झञ्झा | आंधी | १५४ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| झलंझला | झञ्झावायु | १५६ |
| झष | मच्छ | ७६,१३२ ११२ |
| डम्बर | आडम्बर | ३४२ |
| डिम्भ | बालक | १८४ |
| तटाक | तालाब | २५, ७६ |
| तनय | पुत्र | १७० |
| तनुजा | पुत्री | ४३ |
| तति | समूह | ११६ |
| तमस् | अन्धकार | २१५ |
| तरणि | सूर्य | १४७ |
| ताति | पंक्ति | ३१३ |
| तार्क्ष्य | गरुड | ३१३ |
| तार्क्ष्यकेतु | गरुड़ध्वज | १७१ |
| तिमिर | अन्धकार | ११ |
| तुक् | पुत्र | १३५, १४३ |
| तुरुष्क | यवन | २६६ |
| तूर्ण | शीघ्र | १०२ |
| तूल | रुई, विस्तार | १५१, २४२ |
| त्रिदिव् | स्वर्ग | २१ |
| त्रिविष्टप | स्वर्ग | १० |
| त्रेता | तीसरा युग | २८६ |
| दन्तच्छद | ओष्ठ | ३६ |
| दन्तिन् | हाथी | ७२ |
| दरी | गुफा | १८४ |
| दल | पत्र | २४८ |
| दस्यु | चोर | १६० |
| दाम | माला | ७६ |
| दार | स्त्री | ३३७ |
| दिनप | सूर्य | ६८ |
| दिनेश | सूर्य | ७६ |
| दिव् | आकाश | ३२५ |
| दिशा | दिशा | ५८ |
| दुकूल | वस्त्र | ८२ |
| दुरन्त | असीम | २५७ |
| दुर्दिन | मेघ-युक्त-दिन | ५६ |
| दुरित | पाप | २८५ |
| दृप्त | उद्धत | १७६ |
| दृश् | नेत्र | ३३ |
| दूरेक्षणयन्त्र | दूरबीन | ३१६ |
| दोर्बली | बाहुबलि | २६७ |
| दोःशक्ति | बाहुबलि | १३५ |
| दोषाकर | चन्द्र | ३६, ४८ |
| दंशन | काटना | १५० |
| द्रविण | धन | १०५, १४१ |
| द्रह | सरोवर | ७४ |

| शब्द | अर्थ | पृष्ठ | शब्द | अर्थ | पृष्ठ |
|---|---|---|---|---|---|
| द्वय | दो | ३१ | नाद | शब्द | ३० |
| द्राक्षा | दाख | १ | निकृन्तिन् | काटने वाला | |
| द्वापर | दूसरे युगका नाम | २८६ | निगड़ | जंजीर | १७७ |
| द्विज | पक्षी | १५१ | निगल | गला | १५ |
| द्विजिह्व | सर्प, निन्दक | १८३ | नितम्बिनी | स्त्री | २३२ |
| द्विरद | हाथी | ७१ | निपात | पतन | २५६ |
| द्युसद् | देवता | ११० | निमेषभाव | पलक गिराना | ६ |
| धरा | पृथ्वी | १६५ | निम्नगा | नदी | २४ |
| धरासुर | ब्राह्मण | २१० | निरम्बर | वस्त्र-रहित | १४३ |
| धव | पति | १४६, २७२ | निरेनस् | पाप-रहित | ३३४ |
| | | | निर्घृण | निर्दय | ११६ |
| धुरन्धर | भार-धारक बैल | ७२ | निर्निमेष | पलक-रहित | ३३ |
| धूमके | पुच्छलतारा, अग्नि | ६६ | निर्भीषण | विभीषण | २६१ |
| धेनु | गौ | २५ | निर्मोक | कांचली | १८८ |
| ध्याति | ध्यान | २७६ | निर्वृति | मुक्ति | २३१ |
| ध्रुव | निश्चित, नित्य | २६६ | निलय | निवास | २११ |
| ध्वान्त | अन्धकार | २१४ | निवह | समूह | ७६ |
| नक्र | मगर | ११२, ३१३ | निशा | रात्रि | ३३, ६६ |
| नमुचि | एक राक्षस | ६७ | निशाचर | राक्षस, रात्रि भोजी | २२१, २८३ |
| नमोह | मोह-रहित | ३२३ | | | |
| नलाशय | जलाशय | ३२४ | निष्क | बहुमूल्य | १५६ |
| नवोढा | नवविवाहिता | १३८ | निष्ठा | श्रद्धा | २६३ |
| नाक | स्वर्ग | २६, २४३ | निस्तुल | अनुपम | १७४ |
| | | | निःस्व | निर्धन | १४४ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| नि:सङ्गता | अपरिग्रहता | २८० |
| नीर | जल | ११७ |
| नीरद | मेघ | ६२ |
| नूत्न | नवीन | ३०६ |
| नूपुर | पायजेब, बिछुड़ी | ८३ |
| नेक | भद्र | ३ |
| पञ्चानन | सिंह | २६२ |
| पट | वस्त्र | ३३५ |
| पतङ्ग | पतंग, चंग | १८५, २४६ |
| पत्तन | नगर | १११ |
| पयोदमाला | मेघपंक्ति | ८५ |
| पयोमुच् | मेघ | २२६ |
| पराग | पुष्पराग | ६७ |
| पराभूति | तिरस्कार | २६६ |
| परिकर्म | प्रसाधन, समारंभ | १६४ |
| परोक्षज्ञान | अविशद और इन्द्रिय-जनित ज्ञान | ३२१ |
| पर्यटं | घूमने वाला | २२८ |
| पर्वत | पहाड़ | ३४४ |
| पलाश | ढाक | १०३, २८३ |
| पल | क्षण, मांस | २४८ |
| पलित | वृद्धताकी सफेदी | १३१ |
| पल्लव | किशलय | १२५ |
| पाणि | हाथ | २४१ |
| पाथेय | मार्ग का भोजन | १८ |
| पाथोज | कमल | ७० |
| पाद | किरण, चरण | १८४ |
| पादप | वृक्ष | ३४६ |
| पामर | दीन, नीच, किसान | २६४ |
| पायस | खीर | १४० |
| पिक | कोयल | ६६ |
| पिच्छिल | कीचड़ वाला | ३२६ |
| पित्सत् | शिशुपक्षी | १०५ |
| पीयूष | अमृत | ६ |
| पुरु | ऋषभदेव | २८६ |
| पुलोमजा | इन्द्राणी | १२१ |
| पुंस्कोकिल | नर कोयल | ६८ |
| पूत | पवित्र | ७५ |
| पूतना | एक राक्षसी | १३६ |
| पूषन् | सूर्य | १६१ |
| पृथ्वीसुत | मङ्गल, वृक्ष | २७१ |
| पृदाकु | सर्प | ६६ |
| प्रच्छन्न | गुप्त, छिपा हुआ | ३१५ |
| प्रजरति | वृद्धा | ११२ |
| प्रणय | प्रेम | २५६ |
| प्रतति | विस्तार | ७३ |

| शब्द | अर्थ | पृष्ठ |
| --- | --- | --- |
| प्रतिरूपक | प्रतिबिम्ब | २०७ |
| प्रतीची | पश्चिमदिशा | २२ |
| प्रत्यक्ष ज्ञान | विशद और साक्षात्कारी ज्ञान | ३२१ |
| प्रत्यभिज्ञा | प्रत्यभिज्ञान | ३०१ |
| प्रपा | प्याऊ | २५ |
| प्रमदा | स्त्री | १३२ |
| प्लवङ्ग | वानर | ५९ |
| प्रवित् | ज्ञानी | १६५ |
| प्रसत्ति | प्रसन्नता | ९० |
| प्रसव | मञ्जरी | ९९ |
| प्रसून | पुष्प | ९७ |
| प्राची | पूर्व दिशा | २२ |
| प्रावरण | आच्छादन,कोट | १९८ |
| प्रावृष् | वर्षा ऋतु | ६० |
| प्रासाद | महल | ३४ |
| प्रास्कायिक | अंग-निरीक्षक ऐक्सरे | ३१५ |
| प्रोच्छनक | अंगोछा | ८२ |
| प्रोथ | नितम्ब प्रदेश | ७० |
| फिरङ्गी | अंग्रेज | २६१ |
| बलाहक | मेघ | २०८ |
| बाम्बूल | बबूल वृक्ष | २९७ |
| बाहु-बन्ध | भुज-बन्ध | ८३ |
| बोध | ज्ञान | ५२ |
| भगण | नक्षत्र-समूह | २७ |
| भसद | भयंकर | १५२ |
| भामिनी | स्त्री | २३४ |
| भावन | भवनवासी देव | २०० |
| भावबन्ध | निदान | १७० |
| भाल | ललाट | ८२ |
| भास्वत् | सूर्य | २९८ |
| भुजङ्ग | सर्प | ४२ |
| भूमिरुह | वृक्ष | १८९ |
| भेक | मेंढक | ६३ |
| भोगभुक् | भोगी, सर्प-भक्षी मयूर | ३२६ |
| मघवन् | इन्द्र | २०६ |
| मञ्जुल | सुन्दर | १३९ |
| मंजुलापिन् | मधुरभाषी | ६० |
| मण्ड | मांड, कृत्य | २४६ |
| मण्डल | कुत्ता | १८० |
| मतल्ल | प्रख्यात | १९३ |
| मधु | वसन्त, शहद | १८५ |
| मनाक् | थोड़ा, अल्प | २४७ |
| मन्दार | वृक्ष विशेष, आकड़ा | २९७ |
| मयूख | किरण | १८४ |
| मराल | हंस | ३२७ |
| मर्जू | कृपा | ३५० |
| मर्त्य | मानव | १३६ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| महिष | भैंस। | १४ |
| महिषी | रानी या भैंस | २३४ |
| माकन्द | आम का वृक्ष | ६६ |
| मितंपच | कृपण | १७६ |
| मित्र | सुहृत् | ५६ |
| मित्र | सूर्य | १५१ |
| मिलिन्द | भ्रमर | ३३७ |
| मीन | मछली | ७४ |
| मुकुर | दर्पण | १५७ |
| मृड | शिव | ४६ |
| मृणाल | कमल-दण्ड | १७६ |
| मृत्व | प्रातिपदिक संज्ञा | ४१ |
| मेधा | बुद्धि | ३०२ |
| मेवा | मेवा, सूखे फल | १ |
| मौका | अवसर | २८१ |
| मौढ्य | छात्र, शिष्य | २३६ |
| मौहूर्तिक | ज्योतिषी | १०६ |
| यामिनी | रात्रि | १५० |
| युति | संयोग | ६६ |
| योग | अप्राप्त की प्राप्ति | २७४ |
| रङ्क | दरिद्र | २५ |
| रजस्वला | ऋतुमती | १६४ |
| रणन | शब्द | २२५ |
| रत्नाकर | समुद्र | २३६ |
| रथाङ्गिन् | चकवा | १६८, २७० |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| रथ्या | गली | १८५ |
| रद | दांत | ८४ |
| रय | वेग | ८३, ३२३ |
| रस | जलस्वाद, पारद आदि | ६०, ६१, ६६ |
| रसज्ञ | रस ज्ञाता | ८४ |
| रसा | पृथ्वी, जिह्वा | १४, १६६ |
| रसायनाधीश्वर | वैद्य, वर्षाकाल | ५८ |
| रसाल | आम | ५ |
| रुष | क्रोध | ३१३ |
| रोचिष | कान्ति | ६६ |
| रोटिका | रोटी | १३६ |
| रोलम्ब | भ्रमर | ३२६ |
| रोष | क्रोध | २५५ |
| रौरव | एक नरक | १७१ |
| लास्य | नृत्य | ८४ |
| लोचन | नेत्र | २३ |
| वक्षोज | स्तन | ६५ |
| वठर | मूर्ख | १३७ |
| वणिक्पथ | बाजार | २७ |
| वतंस | भूषण | २५२ |
| वदतांवर | अच्छा बोलने वाला आचार्य श्रेष्ठ | १७३ |

| शब्द | अर्थ | पृष्ठ |
| --- | --- | --- |
| वदान्य | उदार | ८२, २५४ |
| वधूटी | स्त्री | १०० |
| वन्ध्या | बांझ | १२३ |
| वप्तृ | बोने वाला | २१० |
| वप्र | परकोटा | २६,२०८, १९९,२९, |
| वमि | वमन | ३४६ |
| वयस्या | सखी | ५८ |
| वरण | परकोटा | २८, ३७ |
| वर्त्मन् | मार्ग | १५७, ३३१ |
| वर्व | धूर्त | १५ |
| वलभी | अटारी | १८१ |
| वलय | कङ्कण | ३३८ |
| वल्ली | लता | १२५ |
| वसन | वस्त्र | ३३५ |
| वसु | धन | २२८ |
| वाचना | पढ़ना | २९० |
| वाडव | समुद्र की अग्नि | ३०२ |
| वातवसनता | दिगम्बरता | २०६ |
| वान | व्यन्तरदेव | २०० |
| वारण | हाथी | २८, १२३ |
| वारिद | मेघ | २२५ |
| वारिमुच | मेघ | २८ |
| वारिवाह | मेघ | २२८ |
| वार्द | मेघ | ३०२ |
| वार्दल | मेघ | ६१ |
| वाविल | ईसाई धर्मग्रन्थ | २९६ |
| बाहुज | क्षत्रिय | २२२ |
| वासर | दिन | ९ |
| वाहद्विषन् | भैंसा | १८२ |
| वाहिनी | सेना | ६५ |
| विचित् | अचित्त, जीव-रहित | ३०७ |
| विटप | वृक्ष | १०३ |
| विड् | वैश्य | २९३ |
| वित्ति | ज्ञान | ९६ |
| विधु | चन्द्र | १५३, ३४,३४८ |
| विपणि | बाजार | ३४५ |
| विभावसु | अग्नि | १४८ |
| विश् | वैश्य | २७३ |
| विशारदा | सरस्वती | ६१ |
| विशांपति | राजा | १२४ |
| विष | जल | ३२५ |
| वीजन | पंखा | ९० |
| वीनता | गरुडता | १५६ |
| वृत्त | चरित्र | १८, १६९ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| वृष | बैल, धर्म | ६१, १७८ |
| वृषभ | बैल | ७२ |
| वृषल | शूद्र | २५७ |
| वेरदल | वेरी का पत्ता | २६७ |
| वेला | तट | १६३ |
| वैनतेय | गरुड | १६२ |
| वैश्वानर | अग्नि | १८० |
| व्योमन् | आकाश | ६७, १६४ |
| शकट | गाड़ी | ७२ |
| शकुनि | पक्षी | २२६ |
| शकुनी | शकुन-शास्त्र-वेत्ता | ,, |
| शकुन्त | पक्षी | २७८ |
| शक्र | इन्द्र | ८० |
| शची | इन्द्राणी | १२, ११३ |
| शम्पा | बिजली | ६०, ३०, ३०२ |
| शय | हाथ | ३२६ |
| शयान | सोता हुआ सर्प | १७६ |
| शर | बाण | १०६, ११८ |
| शरधि | तरकस, तूणीर | १२८ |
| शर्मन् | सुख | ३४० |
| शलाका | सलाई, श्रेष्ठ | १८६ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| शशधर | चन्द्र | ५३ |
| शात | सुख | ८२ |
| शान | गौरव, प्रतिष्ठा | २५७ |
| शाप | दुष्कृत्य, बददुआ | ३४३ |
| शिखावल | मोर | १८१ |
| शिवद्विष् | शिव-शत्रु काम | १८५ |
| शिश्न | पुरुषलिङ्ग | १४ |
| शीकर | जलकण | ६३ |
| शुनी | कुतिया | २६३ |
| शुल्क | कर, मूल्य | ८१ |
| शूलिन् | शिव | ४० |
| शेष | सर्पराज | २६ |
| शोणित | रक्त | १३८ |
| श्मश्रू | दाढ़ी मूंछ | १५ |
| श्रवस् | कान | १३३ |
| श्लक्ष्ण | चिकना | ५३ |
| श्वभ्र | नरक | २१६ |
| श्वश्रू | सास | १३० |
| श्रोणि | जघन | ४८ |
| षट्पदी | भ्रमरी | ५४ |
| षड्वर्गक | ज्योतिष के ६ वर्ग | २० |
| सकाश | :समीप | २११ |
| सचित्त | सजीव | ३०७, ३५२ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| सटा | केशर | १४१ |
| सदारता | सस्त्रीकता | १२६ |
| सद्मन् | घर | ११५, ११७ |
| सत्तम | श्रेष्ठ | ६८ |
| सत्र | अन्नक्षेत्र,सदावर्त | २५ |
| सत्रा | साथ | २२३ |
| सत्वर | शीघ्र | १५६ |
| सधर्मिणी | स्त्री | २३५ |
| सप्तच्छद | सप्तपर्ण, सात पत्तो वाला वृक्ष | ३२६ |
| समक्ष | प्रत्यक्ष | १५ |
| समिद्धि | प्रकाशमान | २७६ |
| समीर | वायु | २०५ |
| समीरण | वायु | १४८ |
| सरित् | नदी | २४ |
| सव | अभिषेक | ११६ |
| सवितृ | सूर्य | १८५ |
| सहकार | आम | १०० |
| सहस्ररश्मि | सूर्य | ३७ |
| साकम् | साथ | १६७ |
| सान्द्र | घना | १५८ |
| सायम् | सन्ध्या काल | ६ |
| सित | शुक्ल | ३२४ |
| सिन्धु | समुद्र | ६१ |
| सुकन्दत्व | सुव्याप्त | ६७ |

| शब्द | अर्थ | पृष्ठ |
|---|---|---|
| सुचित् | सुहृदय, विद्वान् | १२ |
| सुदामन् | उत्तममाला-धारक | १७५ |
| सुधा | अमृत | ६, १३ |
| सुधाकर | चन्द्र | ३२५ |
| सुधांशु | चन्द्र | १६, ४७ |
| सुनाशीर | इन्द्र | २६ |
| सुभास | गिद्ध पक्षी | १४६ |
| सुपर्वन् | देव | १११, ३१, ११८ |
| सुपर्वभू | स्वर्ग | २७१ |
| सुपीठ | सुन्दर आसन | ७६ |
| सुम | पुष्प | ६३, १०१ |
| सुमाशय | वसन्त | १०४ |
| सुरप | इन्द्र | ११६ |
| सुराद्रि | सुमेरु | १८ |
| सुरीण | क्षीण | ८६ |
| सूची | सुई | २५२ |
| सूपकार | रसोईदार | ३४८ |
| सेतु | पुल | २०१ |
| सोम | चन्द्र | ३२७ |
| सौगन्धिक | सूंघकर भूमिगत वस्तु का जानने वाला | ३१५ |
| सौध | महल | १५८ |
| संगर | युद्ध, वाद | २८८ |

| शब्द | अर्थ | पृष्ठ | शब्द | अर्थ | पृष्ठ |
|---|---|---|---|---|---|
| संविधा | समूह | ६ | स्यूति | उत्पत्ति | २६६ |
| संसद् | सभा | २२४ | स्राक् | शीघ्र | १३६ |
| स्कन्ध | अनेक परमाणुओं का समूह | ३०८ | स्रुति | टपकना | २८६ |
| स्तबक | गुच्छा | १०४ | स्रोतस् | सोता, झरना | १८७ |
| स्तेयिन् | चोर | ६५ | स्वान्तस् | चित्त | २५० |
| स्तोम | समूह | २ | स्वेद | पसीना | १८२ |
| स्मय | आश्चर्य | २०४ | हरि | सिंह | १७१ |
| स्मर | काम | ६६, ३२८ | हरिविष्टर | सिंहासन | ११० |
| | | | हिमारि | सूर्य | १४७ |
| | | | हृषीक | इन्द्रिय | १३२ |

## तीर्थङ्कर नाम-सूची



## गणधर नाम-सूची



## आचार्य नाम-सूची

## ग्रन्थ-नाम-सूची



## विद्वज्जन-नाम-सूची



## वंश नाम-सूची



❖×❖

# विशिष्ट व्यक्ति-नाम-सूची

## भौगोलिक नाम-सूची

| नाम | परिचय | पृष्ठ |
|---|---|---|
| दशार्ण | मध्य प्रदेश का एक देश | २३० |
| धातकी खण्ड | मध्य लोकस्थ द्वितीय द्वीप | १७२ |
| निर्गुन्द देश | एक दक्षिणी देश | २३३ |
| पल्लव देश | ” ” | २३३ |
| पुण्डरीकिणी नगरी | एक पौराणिक नगरी | १७४ |
| पुष्कल देश | एक पौराणिक देश | १७४ |
| पूनंल्लि ग्राम | एक दक्षिणी ग्राम | २३३ |
| भारतवर्ष | हिन्दुस्तान | १६ |
| मथुरा | प्रसिद्धपुरी | १६६ |
| महीशूर | मैसूर | २३३ |
| मिथिलापुरी | जनकपुरी | २११ |
| मौर्यग्राम | मगध देश का एक ग्राम | २१० |
| मंगलावती | एक पौराणिक नगरी | १७२ |
| रजताचल | विजयार्धपर्वत | १७२ |
| राजगृह | विहार का प्रसिद्ध नगर | २१२ |
| राजपुरी | हेमांगद देश की राजधानी | २२६ |
| वीतभयपुर | सिन्धु देश की राजधानी | २३० |
| विदेहदेश | विहार प्रान्त का एक देश | २१<br>१७२ |
| वैशाली | वज्जी जनपद की राजधानी | २३० |
| साकेत | अयोध्यापुरी कोसल की राजधानी | १७३ |
| सिन्धु | प्रसिद्ध नदी | २० |
| हस्तिनागपुर | प्रसिद्ध नगर | २३० |

# : वीरोदय-गत-सूक्तयः :

| सूक्तयः | पृष्ठ |
|---|---|

| सूक्तयः | पृष्ठ |
|---|---|

सूक्तयः | पृष्ठ



✱×✱

**गोमूत्रिका बन्ध रचना—**

रमयन् गमयत्वेष वाङ्मये समयं मनः ।
न मनागनयं द्वेष-धाम वा सभयं जनः ॥
( सर्ग २२ श्लोक ३७ )

| र | य | म | त्वे | वां | ये | म | म |
|---|---|---|---|---|---|---|---|
| म | ग | यं | ष | म | स | यं | नः |
| न | ना | न | द्वे | धा | वा | म | ज |

**यान बन्ध रचना—**

न मनोद्यमि देवेभ्योऽर्हद्भ्यः संप्रजतां सदा ।
दासतां जनमात्रस्य भवेदप्यद्य नो मनः ॥
( सर्ग २२ श्लोक ३८ )

**पद्म बन्ध रचना—**

विनयेन मानहीनं विनष्टैनः पुनस्तु नः ।
मुनये नमनस्थानं ज्ञानध्यानधनं मनः ॥
( सर्ग २२ श्लोक ३६ )

**तालवृन्त बन्ध रचना—**

सन्तः सदा समा भान्ति
मञ्जूमति नुति प्रियाः ।
अयि त्वयि महावीर
स्वीतां कुरु मञ्जू मयि ॥
( सर्ग २२ श्लोक ४० )

# शुद्धि-पत्र

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | १२ | शरीरिक | शारीरिक |
| २ | २० | जन: | जना: |
| ४ | २ | कहते | करते |
| १४ | १२ | स्वरसेण | स्वरसेन |
| १६ | २ | इस | इन |
| १६ | ५ | कोऽपि चित्तं | कोपि चित्तं |
| १७ | ५ | दुरितान्धारके | दुरितान्धकारके |
| १६ | २१ | चारितस्तत् | वारितस्तत् |
| २० | ८ | लासि गुण: | लासिगुण: |
| २४ | १८ | को व्यक्त | व्यक्त |
| ३५ | २१ | गोपु | गोपुर |
| ४४ | २० | गुणों | गुणों के |
| ४५ | २० | तत्पदाधान | तत्पदाधीन |
| ५१ | १८ | निनिर्माय | विनिर्माय |
| ५४ | १६ | समतां | स मतां |
| ६६ | ७ | वसित्वाऽप्य | वसित्वाऽप |
| ७० | २० | तथा स्या: | तथाऽस्या: |
| ८५ | १ | सुदेव्या | सुदेव्य: |
| ८८ | १७ | वश्य: | वश्यो |
| ६० | ११ | तदा | स्तदा |
| ६३ | ३ | भो भोजना: | भो भो जना: |
| ६४ | १४ | नर्तिमुखेन | नर्ति मुखेन |
| १०३ | ५ | 'विपट' | 'विटप' |

| | | | |
|---|---|---|---|
| ११० | १४ | सरिताम् | सारिताम् |
| ११० | १७ | कि अब | कि हे हरे ! अब |
| ११२ | १६ | कुवलप्रकारान्वये | कुवलप्रकरान्वये |
| ११३ | ८ | जिनभक्तिसत्तुग: | जिनभक्तिसत्तुरा: |
| १२४ | ५ | तटता | सटता |
| १२८ | २ | की वासना से | वासना से |
| १३६ | ५ | संसेजत् | संसजेत् |
| १४३ | ४ | नूतनं तम: | नूतनं वय: |
| १४५ | १४ | होने | होने से |
| १५० | १८ | कोरकारणाम् | कोरकाणाम् |
| १५५ | ७ | तादृशं | तादृक्षं |
| १६० | २ | जाक | जाकर |
| १६४ | १२ | देती है, | देते हैं, |
| १६५ | १५ | ककुल्पा: | ककुल्या: |
| १६८ | ८ | नि:सारवाली | नि:सारतावाली |
| १७० | ६ | वशाख | विशाख |
| १७१ | ८ | कश्चिन् | कश्चिन् |
| १७५ | ११ | हितकारीणी | हितकारिणी |
| १८० | १३ | लगाकर | लगातार |
| १८२ | २० | शीतलं | सुशीतलं |
| १८३ | २ | करता तथा | अर्थात् ग्रीष्म कालमें लोगों लोगों के द्वारा बराबर पंखे की हवा ली जाती है। तथा |
| १६५ | ६ | आकाश | आकाश में |

| | | | |
|---|---|---|---|
| १६८ | ५ | मानस्तंभों के इधर और उस श्रेष्ठ खाई से उधर पुष्प-वाटिका थी। | खाई के बाहरी भाग में मानस्तंभ थे और खाई के भीतरी भाग पर पुष्प-वाटिका थी। |
| २०५ | १४ | मयाऽबुधं | मयाऽम्बुध- |
| २०८ | १४ | च तेन | च निरेति तेन |
| २२२ | ५ | आदि के | आदिक |
| २२२ | १६ | तनूभृत्त- | तनूभृत्त- |
| २२२ | २० | नसी- | नासी- |
| २२३ | ३ | धर्म जिसमें | जिसमें |
| २५६ | १२ | ए | एवं |
| २६० | १७ | रेकरूषा | रेकरूपा |
| २७२ | ७ | सत्याख्यो: | सत्याख्ययो: |
| २७२ | ८ | अवसार्पिणी | अवसर्पिणी |
| २८२ | ६ | प्रचेता | प्रचेता: |
| २८२ | १५ | मन्वेति | मन्वेति |
| २८२ | १७ | में | में माता की |
| २८४ | २२ | नारकीय या | नारकीय |
| २८६ | १० | तन्तु | तन्तु: |
| २८७ | ६ | पुरोरबाह्य: | पुरोरबाह्यं |
| २८७ | ६ | भृताऽवगाह्य: | भृताऽवगाह्यं |
| २८७ | १० | रूप सूत्र | सूत्र |
| २८८ | ७ | हुए से | हुए दो |
| २६० | १० | वाढ | वाढं |
| २६० | १३ | मंत्रों के | मंत्रों के अर्थ के |
| २६१ | १ | अपेक्षा | उपेक्षा |

| | | | |
|---|---|---|---|
| २९२ | २० | मानने | मानते |
| २९६ | २२ | ततोस्तु | तयोस्तु |
| २९९ | २३ | तमाममीमांमकनाम कोऽपि | तमां स मीमांसकनामकोऽपि |
| ३०० | १३ | मा न्यमूर्ध्वं | सामान्यमूर्ध्वं |
| ३०२ | ६ | बढवानल | बडवानल |
| ३०२ | २१ | 'अप्' | 'आपः' |
| ३०६ | १८ | जिस एक वनस्पति रूप | जिस वनस्पति में एक |
| ३०६ | १९ | उसे | उसे संसार के दुःख नष्ट करने वाले |
| ३०६ | २० | जिस एक वनस्पति रूप | जिम वनस्पति में एक |
| ३०७ | ११ | मभी वायुकायिक | इन मभी स्थावर कायिक |
| ३०७ | १२ | यह वायु भी | ये मभी |
| ३०७ | १२ | हो जाती है | हो जाते हैं |
| ३१८ | ४ | भेदमुवेमि | भेदमवैति |
| ३१८ | १० | ज्ञान में जानना चाहिए | ज्ञान में दुःखातीत सर्वज्ञ ने कहा है, ऐसा जानना चाहिए |
| ३२४ | १४ | रिस्कुर- | परिस्कुर- |
| ३२४ | १५ | लाशयं | जलाशयं |
| ३२७ | १६ | मुष्ठिमारात् | मुष्ठिनारात् |
| ३३२ | ८ | करके | करने |
| ३३५ | १३ | उनसे | जो विक्रम मे |
| ३४२ | २ | डन्बर | डम्बर |
| ३५० | १७ | त्ययि | त्वयि |

—::●::—

# वीरोदय के प्रकाशनार्थ दातारों की सूची

| | | | |
|---|---|---|---|
| ६००) | श्री दि० जैन समाज | मदनगंज ( किशनगढ़ ) | |
| १०१) | पं० महेन्द्र कुमारजी जैन | ,, | ,, |
| १०१) | पं० लादूलालजी जैन | ,, | ,, |
| १०१) | श्री महीपाल कस्तूरचन्द वैद | ,, | ,, |
| १६८) | फुटकर प्राप्त | ,, | ,, |
| ५६) | मंडावरिया देवालाल मांगीलाल रांवका | ,, | ,, |
| ६०२) | श्री जैन समाज दादिया | ,, | ,, |
| १६५) | श्री जैन पंचायत छोटा लाम्बा | ,, | ,, |
| २५१) | श्री रामस्वरूपजी कबाड़ी | केशरगंज | अजमेर |
| १५१) | श्री कैलाशचन्द्रजी कपड़े वाले | ,, | ,, |
| १०१) | श्री कन्हैयालालजी कबाड़ी | ,, | ,, |
| १०१) | श्री शान्तिलालजी विलाला की धर्म पत्नी विमलाबाई | ,, | ,, |
| ६१) | श्री मथुरालालजी बज अजमेर | | |
| १०१) | श्री छगनमलजी रतनमलजी दोसी | केशरगंज | अजमेर |
| ७२) | श्री चमेली बाई नागर वाली | ,, | ,, |
| ५१) | श्री किशनगोपालजी प्रेस वाले, | ,, | ,, |
| ५१) | श्री प्रेमचन्दजी महावीरजी कबाड़ी | ,, | ,, |
| ५१) | श्री नत्थीलालजी टेन्ट वाले | ,, | ,, |
| ५२) | श्री स्त्री समाज | ,, | ,, |
| २२) | श्री मगनबाई | ,, | ,, |
| २६) | श्री स्त्री समाज | ,, | ,, |

१५२) श्री रतनलालजी टीकमचन्दजी गदिया, नसीराबाद
१२२) श्री नेमचन्दजी प्रवीणचन्दजी सर्राफ ,,
१०१) श्री गम्भीरमलजी सेठी ,,
१०१) श्री सुमेरमलजी ठेकेदार ,,
१०१) श्री भंवरलालजी सोनी ,,
१०१) श्री छगनलालजी गदिया ,,
१०१) श्री कस्तूरमलजी हुक्मचन्दजी बिलाला ,,
५२) श्री मानकचन्दजी भंवरलालजी ,,
५१) श्री दुलीचन्दजी बाकलीवाल ,,
५१) श्री जैन महिला ,,
२१) श्री जीवनलालजी ,,
२१) श्री बाबू शान्तिलालजी ,,
१०१) श्री मानमलजी भागचन्दजी सेठी सनोद
१८३) श्री घीसालालजी सेठी एण्ड सन्स ,,
२१) श्री कुञ्जीमलजी सुजानमलजी ,,
२१) श्री मूलचन्दजी ,,
२१) श्री मिश्रीलालजी छीतरमलजी नसीराबाद
२१) श्री चांदमलजी पाटोदी ,,
२२) श्री स्त्री समाज ,,
११) श्री नेमीचन्दजी कपूरचन्दजी केशरगंज, अजमेर

———

४६५६) रु०

उपर्युक्त दातारों को श्री ज्ञानसागर ग्रन्थमाला की ओर से कोटिशः धन्यवाद है।

—मन्त्री

— ❖ —

# -: ग्रन्थमाला से प्रकाशित ग्रन्थ :-

**दयोदय चम्पू**—इसमें मृगसेन धीवर की कथा का सुन्दर वर्णन कर बतलाया गया है कि निरन्तर मछलियों को मारने वाला भी एक धीवर 'जाल में प्रथम बार फसी हुई मछली को नहीं मारूंगा' इतने मात्र अहिंसाणुव्रत को धारण करने के पुण्य से किस प्रकार आगामी भव में एक भाग्यशाली कुल में जन्म लेता है, तो जो जीव मन वचन काय से प्राणिमात्र की हिंसा का त्याग करेंगे उनके माहात्म्य का क्या कहना है। प्रसंगवश इसमें वेदों और हिन्दू पुराणों के अनेक उद्धरण देकर यह बतलाया गया है कि अहिंसा ही परम धर्म है। प्रत्येक पुरुष के पढ़ने और मनन करने योग्य है। पृष्ठ संख्या १६४। मूल्य १.५०।

**सुदर्शनोदय काव्य**—इसमें स्वदार-सन्तोष-व्रत के धारक सुदर्शन सेठ का महान् चरित्र चित्रण किया गया है। प्रकरण-वश अनेक राग-रागिणियों में प्रभाती, भजन, पूजन आदि का भी सुन्दर वर्णन किया गया है। अन्त में बतलाया गया है कि गृहस्थी में रहते हुए भी केवल स्वदार-सन्तोष व्रत के प्रभाव से मनुष्य मृत्यु जैसी यातनाओं से छुटकारा पाता है और पूर्ण ब्रह्मचर्य के प्रभाव से मुक्ति के महान् सुखों को प्राप्त करता है। एक बार पढ़ना प्रारम्भ करने पर समाप्त किये बिना छोड़ने की इच्छा नहीं होती है। विस्तृत प्रस्तावना के साथ सुन्दर सम्पादन किया गया है। पृष्ठ सं० २७२ और सजिल्द होने पर भी मूल्य लागत मात्र २.५०।

**वीरोदय**—पाठकों के हाथों में उपस्थित है। मूल्य ६.००।